

# श्रीवेङ्कटेश्वरान्नप्रसादधार्मिकसंस्था एकदिन धनवितरणपथकम्

अन्नं परब्रह्मस्वरूपम्। क्षुत्पीडितस्य अन्नदानादन्यत् समंपुण्यं नास्ति। अनेन सदाशयनेनैव तिरुमल तिरुपति देवस्थानं तिरुमलतिरुपतितिरुचानूरुपुण्यक्षेत्रेषु नित्यमन्नप्रसादं वितरति। एतदर्थं बहवः दातारः अत्यधिकधनदानं कुर्वन्ति इति सर्वविदितोऽयं विषयः। परन्तु भूरिदानशक्तिः सर्वेषां न स्यात्। इमं विषयं बुद्ध्वा एकदिनान्नप्रसाद वितरणव्ययाय पर्याप्तं धनमपि स्वीकर्तुं ति.ति.देवस्थानं संसिद्धं भवति। भक्ताः स्पन्दन्तु सहजीविनां क्षुद्बाधां दूरीकुर्वन्तु। धनवितरणात् माधवस्य अनुग्रहं प्राप्नुवन्तु। न केवलं व्यक्तिगत वितरणं भिन्नभिन्न संस्थाभिः प्रेषयितुमवकाशः परिकल्पितः। दात्रा एकदिनान्नदान धनवितरणाय ४४ लक्षरूप्यकाणि। अल्पाहारव्ययधन प्रेषणाय दशलक्ष (१०,००,०००) रूप्यकाणि, मध्याह्नभोजनव्ययधनदानाय सप्तदश (१७) लक्षरूप्यकाणि प्रेषणीयानि। यावद्दिनान्नदानधनवितरणकर्तुः, २५ पञ्चविंशति लक्षरूप्यकधन दातुः, आल्पाहार, मध्याह्न भोजनरात्रि भोजनव्ययधनदातॄणां देवस्थानद्वारा कल्प्यमान सौकर्याणि समानान्येव। दातॄणां तेषां आभीष्टानुगुणदिने स्वयं भोजनशालायां स्वहस्ताभ्यां पंक्तौ अन्नसन्तर्पणावकाशः अस्ति। अपि च वितरणकर्तुनामापि मातृश्री तरिगोण्ड वेङ्गमाम्बान्नप्रसादवितरणकेन्द्रे ति.ति.दे प्रदर्शयिष्यति।

### दिनव्ययम् ...

| | | |
|---|---|---|
| १. | अल्पाहारार्थं | १० |
| २. | मध्याह्नभोजनार्थं | १७ |
| ३. | रात्रिभोजनार्थं | १७ |
| | मिलित्वा | -४४ |

**दातृभिः वितरणधनं ति.ति.दे. अन्नप्रसादसंस्थायाः प्रेषणीयम्।**

अन्यविवरणार्थं उपकार्यनिर्वहणाधिकारी (डोनारुसेल् आदिशेषु गेस्ट् हौस् ति.ति.दे. तिरुमल वर्णेन् १८७७२२६३००/२२६३४७२ मैल् ऐडि - cdmc.ttd@tirumala.org





## गीतामृतम्

श्रीभगवानुवाच -

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्।।

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः।।

(भगवद्गीता २.४१-४२)

श्रीभगवान् उवाच। हे अर्जुन!

भावः - हे अजुन! निश्चयात्मिका, बुद्धिः (ज्ञानम्) एकरीत्यैव भवति। निश्चयरहितानां मनोव्यापाराः (ज्ञानानि) बहुविधव्यापकाः असंख्याकाः भवन्ति। अतः अनुष्ठाने निश्चयबुद्धिं निवेशय। विशेषांशाः -ः चित्तैकग्रयं विना येकेऽपि मोक्षद्वारे न प्रविशेयुः। तुरीयपदव्यां सुषुन्मानाड्यां स्थिरत्वाय वृत्तिविनाशद्वारा चित्तैकाग्रयस्य आत्मनः एव साध्यं स्यात्)

वेदस्य अर्थवादवाक्यैः आकृष्टाः विषयभोगेषु स्वर्गादिसुखेषु आसक्ताः आत्मज्ञानशून्याः अविवेकिनः स्वर्गसुखमेवोत्कृष्टं श्रेष्ठमिति श्रेयस्करमिति अन्यन्नास्तीति जन्मकर्मा -त्मकेहरसुखप्रदवेदप्रतिपादित कर्मकलापप्रधानमनोहरवचनानि वदन्ति।



## सङ्कीर्तनम्

अस्मदादीनामन्येषाम् अन्येषाम्
तस्मिन् तस्मिन् तत्र च पुनश्च
सतताध्ययननिष्ठपराणां दृढ
व्रतिनां यतीनां वनवासिनां
गतिरिह स्मर्तुं तु अगत्यां पर
स्थितिरियं काविष्णुसेवा पुनश्च
मोहिनामत्यन्तमुष्कराणां गुण
ग्राहिणां भुवनैककठिनानाम्
देहसञ्चालन वैदेशिको वा सदा
श्रीहरिस्मरणविशेषः पुनश्च
किं कुर्वाणदुःखितजीविनाम्
पङ्किलमनोभयभ्रान्तानाम्
शङ्कानिर्वृतिः सरसा का श्री
वेङ्कटाचलपते विनुतिः पुनश्च।

(अन्नमाचार्य आध्यात्मक सङ्कीर्तना)

# तिरुमल पुण्यक्षेत्रे तिरुप्पावै

आर्तत्राणपरायणाय श्रीवेङ्कटेश्वरराय प्रत्यहं उदये सुप्रभातमारभ्य रात्रौ एकान्तसेवापर्यन्तं षहवः उत्सवाः निर्वाह्यन्ते। वारपक्षमासवार्षिकोत्सवाः अत्यन्तवैभवोपेततया प्रचलन्ति। एवं बहुसेवा निर्वहणे श्रीवेङ्कटेश्वरस्वामिनः दिनचर्यायां ''कौसल्या सुप्रजाराम! पूर्वासन्ध्या प्रवर्तते इति सुप्रभात स्तवेन प्रारभ्यते। इयं सुप्रभातसेवा धनुर्मास नामक एकमासेन विना अन्यमासेषु यावद्वर्षं प्रचलति। धनुर्मासे मास पर्यन्तं गोदादेव्याः (अण्डाल्) स्वामिकीर्तन पाशुरगानं प्रवर्तते। अयं धनुर्मासः वर्षे वर्षे प्रायशः मार्गशिर पुष्यमासयोः सन्दृश्यते। अर्थात् सौरमानमनुसृत्य डिसेम्बर् १५ अथवा १६ तिथौ प्रारब्धा जनवरि १४ तिथौ परिसमाप्यते। तमिलसाहित्ये चतुस्सहस्र पाशुरग्रथित नालायिरदिव्यप्रबन्ध ग्रन्थः सुप्रसिद्धः। अयं ग्रन्थः वैष्णवभक्ताग्रेसरद्वादश सूरिभिः (आल्वारुलु) भगवत्कीर्तनत्परा विराजते। एते द्वादश प्ररमयोगिनः इत्यपि व्यवह्रियन्ते।

परमयोगिभिरेतैः पारवश्यतया श्रीमहाविष्णुमधिकृत्य कीर्तितपाशुर प्रबन्धाः वेदाः इव सम्भाव्यन्ते। तत्र तिरुप्पावै इति त्रिंशत्पाशुरकर्ती गोदादेवी। इयं पेरियाल्वारु इति प्रसिद्ध विष्णुचित्तस्य पोषितपुत्री। श्रीविल्लिपुत्तूरुग्रामे वटपत्रशायिनः विष्णोः विष्णुचित्तः कैङ्कर्यं नित्यं कुर्वन् पुष्पमालाः समर्पयति स्म। पुत्री गोदादेवी पितुरनुक्त्वा आदौ स्वयं ताः पुष्पमालाः धृत्वा पितुस्सकाशं स्वामिकैङ्कर्यार्थं प्रेषयति स्म। अतः तस्याः आमुक्तमाल्यदेति चूडिकोड्डुत्तनाच्चियारु इति व्यवहारः आगतः। बहुभिः वैष्णवाग्रेसरैः दर्शितकीर्तित प्रधनक्षेत्रं तिरुमल पुण्य क्षेत्रम्।पोयिगै अल्वार्, तिरुमलिशै आल्वार् नम्माल्वार् इत्यादयः श्रीवेङ्कटाचलपतिं बहुधा सङ्कीर्त्य गानं चक्रुः। एकैव महिला आल्वारु इति प्रसिद्धा अण्डाल् (गोदादेवी) अपि श्रीवेङ्कटेशं कीर्तितवती।

''वेय्यिदोरु तकलू मिल् शक्केरक्केयू वेगड

वर्केन्नैविदिकित्तिये'' गोदादेव्युक्तं इममङ्कितभावं अनुसृत्य भगवद्रामानुजाः अपि तिरुमल तिरुपति-देवालयेषु तिरुप्पावै पठनं प्रतिधनुर्मासे अनुष्ठापयन्ति। रामानुजाचार्यस्यापि गोदादेव्यां तदुक्त तिरुप्पावै पाशुरेषु अत्यन्त भक्तिप्रपत्तयः वर्तन्ते। एतानि तिरुप्पावै पाशुराणि सर्ववेदसारः इति व्याख्याय प्रचारकारणात् तिरुप्पावै जीयर् इति प्रसिद्धिङ्गताः। अस्मिन् मासे तिरुमल क्षेत्रे श्रीनिवासाय सुप्रभात स्थाने जिय्यंगारस्महोदयाः एकाङ्गि वैष्णवाचार्यादयोऽपि आण्डाल् तिरुप्पावै पठनं एकान्ततया निर्वहन्ति। धनुर्मासे त्रिंशद्दिनानि श्रीवेङ्कटेश्वरं श्रीकृष्णं सम्भाव्य अर्चकाः पूजयन्ति।

अत एव सप्तलोकानां असमान सप्तगिरिक्षेत्रे धनुर्मासे आनन्दनिलयसन्निधौ प्रवर्तमानोत्सव विशेषेसु भागस्वाम्यतया आगत्य पुण्यभाजिनः भवन्तु। आगच्छन्तु आगच्छन्तु।

**ओं नमो वेङ्कटेशाय**

# डिसेम्बर् -२०२४

सम्पुटिः-११ सञ्चिका-०९

स्वस्तिश्री चान्द्रमानश्रीक्रोधिनामसंवत्सर कार्तिक बहुल - अमावास्या आदिवारादारभ्य पुष्यशुद्धपाड्यमी मङ्गलवारपर्यन्तम् - २०२४



मुखचित्रम् - श्रीकृष्णालङ्कारे श्री मलयप्पस्वामी, तिरुमल।
अन्तिमपुटः- गोविन्दराजस्वामिदेवालये गोदादेवी, तिरुपति।


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते सम्पर्क कुर्वन्तु -

sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-


*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका






गौरवसम्पादकः-

श्री जे.श्यामला राव, I.A.S.,

कार्यनिर्वहणाधिकारी

ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः

डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः -

डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,

प्रत्येकाधिकारी,

ति.ति.दे.मुद्रणालयः,

तिरुपतिः।

मुख्यछायाचित्रग्रहणम् - श्री पि.एन्.शेखरः,

छायाचित्रग्राहकः, ति.ति.दे.

श्री बि.वेङ्कटरमणः,

सहायक-छायाचित्रग्राहकः, ति.ति.दे.



सूचना

मुद्रितलेखानां विचाराः लेखकानामेव। एतद्विषये अस्माकं दायित्वं नास्ति।

*— प्रधानसम्पादकः*



# तिरुचानूरु पञ्चमीतीर्थ प्राशस्त्यम्

- डा.जि.चन्द्रशेखर्, चरवाणी - ९४९१७९४५०६

भारतदेशे शैववैष्णवशाक्तेय देवालयेषु नित्यवारपक्षमासायनवर्षोत्सवाः आगमोक्तरीत्या निर्वाह्यन्ते। सर्वेष्वप्यालयेषु संवत्सरोत्सवः प्रमुखस्थानमाक्रमति। एते उत्सवकार्यक्रमाः सर्वेषु देवालयेषु एकरीत्या न प्रचलन्ति। आन्ध्रदेशे एव वेङ्कटेश्वरालयेषु भिन्नभिन्नकारणैः भिन्नभिन्नपद्धतिषु उत्सवनिर्वाहं वयं पश्यामः। कलियुगप्रत्यक्षदैवस्य श्रीवेङ्कटेश्वर स्वामिनः वार्षिक ब्रह्मोत्सवः इव तिरुपतिसमीपे तिरुचानूरु - पद्मावतीमातुः ब्रह्मोत्सवाः वर्षे वर्षे निर्वाह्यन्ते। तिरुमल ब्रह्मोत्सवेषु विविधवाहन सेवानन्तरं अवभृधेन उत्सवकार्यक्रमः परिसमाप्यते। तस्मिन्नेव दिने तिरुमञ्जनेन सह सुदर्शन चक्रस्यापि स्वामिपुष्करिण्यां चक्रस्नानं निर्वहन्ति। पवित्रतीर्थस्वामिपुष्करिण्यां चक्रावगाह निर्वाहात् भक्ताः इदं तीर्थवारिस्नानमिति भावयन्ति। तिरुचानूरु पद्मावतीदेव्याः अपि अस्मिन् वर्षे डिसेम्बर् मासे षष्ठ दिनाङ्के ध्वजारोहणमिति पञ्चमीतीर्थ अवभृधं, चक्रस्नानं, अन्ते ब्रह्मोत्सवाः वैभवोपेततया निर्वहन्ति। तत्तत्सन्दर्भेषुनिर्वाह्यमानवाहनसेवानां, मातुः पद्मावती देव्याः एव प्राधान्यं वर्तते। पद्मावतीदेव्याः वैभवोपेततया ब्रह्मोत्सवनिर्वहणानन्तरं अन्तिमदिने पद्मसरोवर प्राङ्गणे देव्याः सरोवरे तस्य चक्रत्ताळवारोः पवित्रावगाहः निर्वाह्यते। इदमेव पञ्चमीतीर्थमिति कथयन्ति।

भारतीयसम्प्रदायेषु केषाञ्चिन्मासेन साकं तिथेरपि प्राधान्यं वर्तते। व्रतानि सर्वाणि तत्तत्तिथिनियमप्रकारं प्रवर्तन्ते। विनायकचविति, नरकचतुर्दशी इत्यादीन्येत्तादृशान्येव। केषाञ्चिन्नक्षत्रप्राधान्यं तिथिप्राधान्यमपि दृश्यते। उदाहरणतया श्रीवैष्णवाः चतुर्दशीरोहिणीयोगदिने श्रीजयन्तिं निर्वहन्ति। अन्ये स्वसम्प्रदायानुगुणं तिथेः प्राधान्यं ददति। भारतीय ज्यौतिषसम्प्रदाये पञ्चम्याः प्राधान्यं वर्तते। एवमेव आलयोत्सवेषु पञ्चमीतीर्थस्य प्राधान्यं दत्तम्। तिरुचानूरु पुण्यक्षेत्रे पञ्चमीतीर्थनिर्वहणाय प्राचीनकाले एव माता पद्मावती श्रीवेङ्कटेश्वरस्वामिना पद्मसरोवरे पद्मे आविर्भूता। इयमेव सङ्घटना पद्मपुराणे एवं वर्णितम्।

**पद्मसरोवरात् लक्ष्मीप्रादुर्भावः -**

ततः त्रयोदशे वर्षे कार्तिक शुक्लपक्षके।
पञ्चम्यां शुक्रवारे च मुहूर्ते मन्त्रसंज्ञके।।
ववुः पुण्याः सुखावाताः उत्तराषाढ तारके।

प्रसन्नं सलिलं सर्वं त्रैलोक्यान्तर्गतं द्विज।।
सुप्रभो भानुमानासीत् प्रसन्नानि, मनां सि च।
ततः पद्मसरोमध्ये तेजोराशिर्महानभूत्।।

उत्थाय सस्मिता लक्ष्मीः आगत्य हरिमञ्जसा।
कल्हारमालामुन्मुच्य विष्णोः कण्ठे समर्प्य च।।
आलिङ्ग्य तं चतुर्बाहुं सर्वलोकान् व्यलोकयत्।
हरिवक्षःप्रतिष्ठायाः श्रियो दृष्ट्यञ्चलेक्षिताः।।
स्वस्वाधिकारान् सम्प्रापुः देवदानवयोगिनः।
श्रिया समेतो भगवान् कृतार्थः कमलापतिः।।

तदनन्तरं लक्ष्म्यवतारदर्शनार्थं पद्मसरोवरतीरं ब्रह्मादयः आगताः। लक्ष्मीदेवी कमलापतिकण्ठे पुष्पमालां समर्प्य पुनः वक्षःस्थलमङ्कृता। अस्मिन् सन्दर्भे वसिष्ठादयः पद्मसरोवरं बहुधा तुण्टुवुः।

पञ्चमीतीर्थदिवसे पद्मसरोवरतीरे श्रीनिवाससहितां लक्ष्मीं ब्रह्मदिदेवताः भक्ताः बहुधा अस्तुवन्। तत्प्रार्थनाभिः संतृष्टा लक्ष्मीदेवी, मदाविर्भाव पवित्रपद्मसरोवरे पञ्चमीतीर्थशुभमुहूर्ते स्नात्वा मां ये स्तुवन्ति ते दीर्घायुरैश्वर्यविद्याभिः सह तेजोवन्तः सत्सन्तानं प्राप्स्यन्ति इति वरं ददौ। पश्चात् श्रीनिवासः एकांशेन वीरलक्ष्मीं, अर्चामूर्ति रूपेण प्रग्दिशि कल्पितप्रधानांश विशिष्टां महालक्ष्मीं स्ववक्षःस्थले व्यूहलक्ष्मीत्वेन प्रतिष्ठाप्य तिरुमलक्षेत्रं गरुत्मन्तमधिरूह्य जगाम। तदा प्रभृति तिरुचानूरुक्षेत्रे माता पद्मावतीदेवी भक्तकल्पवल्ली सती समर्च्यये।

अवभृध शब्दः साङ्केतिक शब्दः। कस्यचित् पवित्र कार्यस्य सिद्ध्यर्थं आरम्भात् पारिसमाप्रिपर्यन्तं कार्यं निर्वाह्य, दीक्षितैः सर्वैः क्रियमाणस्नानमेव अवभृधमिति वदन्ति। पुराणेषु यागादीनामनन्तरं यागनिर्वाहकाः अवभृधं चक्रुरिति प्रबलोदाहरणानि वर्तन्ते। एवं पवित्रब्रह्मोत्सवानन्तरं प्रधानार्चकैः तदनुसृतैः स्नानाचरणमेव अवभृधस्नानमिति कथ्यते। (दीक्षान्तेऽवभृधो यज्ञे दीक्षाख्यस्य कर्मणः अन्तः दीक्षान्तः। यज्ञदीक्षायां दीक्षान्तः। अवभ्रियते, दीक्षाव्रतं पूर्यते अनेनेति अवभृथः। (भृङ् भरणे) अनया दीक्षाव्रतं निर्वहन्ति। यज्ञान्त रथन्यूनातिरिक्तदोष परिहारार्थं क्रियमाणेष्टिः अवभृधस्नानम्।

पुण्यकार्यनिर्वहणे कर्ता कारयिता प्रमुखौ। तस्मिन् समये भक्ताः जातिलिङ्गवयोभेदरहिताः सरोवरे चक्रस्नानवेळायां मज्जनमाचरन्ति। तस्मिन् समये धर्मार्थकामसिद्ध्यर्थं (निमज्जन्ति) फलसिद्ध्यर्थं सर्वेषामर्हत्वात् सामाजिककर्यभावनया तीर्थस्नानकार्याचरणं सर्वसाधारणमेव। जगन्मातुः पद्मावतीदेव्याः सर्वे समानाः एव। प्राचीनकालादारभ्य तीर्थस्नानसंप्रदायः प्रवर्तते। भूतप्रेतपिशाचबाधानिवारार्थं, भर्तुवियुक्ताः वेङ्कटेश्वरस्वामिनं पद्मावतीव, वयमपि स्वपतिमवापुरिति सानन्दं तीर्थस्नानमाचरन्ति। एवं अनेकसुवासिन्यः चिरकालसुमङ्गलीत्वाय तीर्थमज्जनमाचर्य स्वानुभवं प्रकटयन्ति।

सत्पर्षिसङ्कीर्तितपद्मसरोवरतीर्थं महामहिमोपेतम्। अस्मिन् तीर्थे न केवलं पञ्चम्यां तदनन्तरदिनत्रये मज्जनं पुण्यप्रदमिति महतां विश्वासः। उत्सावान्तरं रात्रौ तिरुच्चि उत्सवः, ततः ध्वजावरोहणकार्यक्रमः प्रवर्तते। तिथिप्राधान्यतया भगवदालयापेक्षया सरोवरप्राधान्यविशिष्ट परमपवित्र मङ्गल कार्यक्रमः एव पञ्चमीतीर्थम्।

मङ्गलसूत्रं कण्ठे भवदीये बध्नतोहरेर्भर्तुः।
संस्पर्शात्तव जातो रोमाञ्चो मा पुनातु सिन्धु सुते।।



## मुखचित्रकथनम् श्री वेङ्कटाद्रिगोविन्दः -

श्रीकृष्णः न अवतारपुरुषः। साक्षात्परब्रह्मस्वरूपम्। शेषाद्रौ स्थितः वरदहस्तः घनवेङ्कटेश्वरः एव धर्मसंस्थापनार्थं युगे युगे अवतरति। एवं द्वापरयुगे अवतीर्य जननादेव महाद्भुतलीलाः प्रदर्श्य अर्जुनाय गीतोपदेशं कृत्वा परंज्योतिरुपेण प्रकाशमानः श्रीकृष्णः, कलियुगे स्वघृतवस्त्रस्थसुवर्णमिव देदीप्यमानः श्रीवेङ्कटाद्रौ गोविन्दः एक एव इति भक्तानां विश्वासः। न केवलं विश्वासः इदं यथार्थमेवेति बहवः आळ्वार्महाशयाः कर्णाटकहरिदासादयः अन्ये च श्रीवेङ्कटेशं कृष्णमिव तुष्टुवुः।

एवं पदकवितापितमहताल्लपाकान्नमाचार्यदृष्टौ तिरुमल श्रीनिवासप्रभुः साक्षात् श्रीकृष्णः एव। अत एव अन्नमय्य श्रीवेङ्कटाद्रिगोविन्दस्य द्वापरयुगस्थगोपाल कृष्णस्य अभेदं कल्पयित्वा द्वावप्यभिन्नाविति वर्णयामास।

**सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।**
**पार्थोवत्सः सुधीर्भोक्ता दुग्धंगीतामृतं महत्।।**

भारतीयाः सर्वे गीताजयन्तिं वर्षे वर्षे विद्यालयेषु मठेषु, गुरुपीठेषु आश्रमेषु पुण्यक्षेत्रेषु मार्गशिरशुद्ध-एकादश्यां भक्तिपारवश्येन गीतापठनप्रवचन पूजादिभिः महता वैभवेन सर्वे भक्ताः निर्वहन्ति। अस्मिन् वर्षे डिसेम्बरे ११ तिथौ बुधवासरे गीताजयन्तिं पर्वदिनमिव निर्वहिष्यन्ति। श्री मन्महाभारतान्तर्गत भीष्मपर्वणि पञ्चविंशत्तमाध्यायात् (२५) द्विचत्वारिंशत्तमा ध्यायपर्यन्तं (४२) कथ्यमाना भगवद्गीता साक्षाद्भगवतः श्रीकृष्णमुखारविन्दाद्विनिर्गता। सा गीता सप्तशत श्लोकै र्विराजते (७००) अस्यां गीतायां अष्टादशाध्यायास्सन्ति। कुरुक्षेत्रसंग्रामे गुरुन् बन्धून् दायादीन् दृष्ट्वा मोहमुपगतं युद्धविमुखमर्जुनं कर्तव्योत्मुखं कर्तुं भगवता श्रीकृष्णेन उपदिष्टा भगवद्गीता। श्रीमन्महाभारतस्य भगवद्गीता आत्मैव भवति। गीताज्ञानमुपाश्रित्य त्रीन्लोकान् पालयाम्यहम् इत्यादिश्लोकैः गीतायाः श्रेष्टत्वमवगम्यते। श्रीमद्भगवद्गीता उपनिषत्सारसमन्विता भाति। प्रति अध्यायान्ते श्रीमद्भवद्गीतासु उपनिषत्सुब्रह्मविद्यायां इत्यादि वचनैः गीतायाः उपनिषदत्वं ज्ञायते। श्रीमद्भगवगीता प्रस्थानत्रये अन्यतमा भवति। ब्रह्मणः प्रतिपादकत्वात् ब्रह्मविद्येति सुप्रसिद्धा।

गीतमाहत्स्यमधिकृत्य भूदेव्यै विष्णुना वराहपुराणे प्रोक्तमेवं दृश्यते -

गीताभ्यासरतः मुक्तः कर्मणा नोपलिप्यते गीताध्यायनात् महापापानि विनश्यन्ति। सर्व तीर्थाणि गीतापारायण स्थले वर्तन्ते। गीता पठनस्थले सर्वदैव योगिनारदादयः सहायाः स्युः। गीताविचारणस्थलमेव भगवन्निवासस्थलम् लोकत्रयमपि कृष्णः गीतामाश्रित्यैव पालयति। ब्रह्मरूपा गीता वेदत्रयरूपम्। गीता पाठात् ज्ञान सिद्धिः अवश्यं भवेत्। एकाध्यायपाठात् रुद्रलोकं गीतादशश्लोकपठनात् चन्द्रलोकं व्रजेत्, म्रियमाणः गीतेत्युच्चारणात् उत्तमगतिं प्राप्नुयात्। जनकादयः अपि गीताश्रयणात् निर्धूत कल्मषाः जाताः। इत्येवं गीतायाः महत्त्वं प्रोक्तम्। भक्तेभ्यः गीताबोधनादपि बोधकः मुक्तिं प्राप्स्यति। गीकारं त्यागरूपं स्यात्। तकारं तत्त्ववोधकम्'' संसारसागरं घोरं तर्तुमिछति यो नरः। गीतानावं समासाद्य पारं याति सुखेन सः।इत्यादि वचनानि गीतामहत्त्वबोधकानि। शङ्कररामानुज मध्वचार्याः, रामकृष्ण परमहंसा विवेकानन्दादयः गान्धी, लोकमान्यबालगङ्गाधरतिलकित्यादि महावेदान्तिनः गीतां प्रशंस्य गीतायाः उत्तमोत्तमव्याख्यानं चक्रुः। गीता सर्वमतसा-मरस्यविशिष्टा सर्वजनाचरणीयोपदेशविशिष्टा सर्वजन सम्मता विराजते। धर्मार्थकाममोक्षपुरुषार्थेषु क्रमशः धर्मार्थकामपुरुषार्थ-साधनानन्तरं मोक्षपुरुषार्थसाधनाय सर्वे मार्गाः गीतायां प्रदर्शिताः। प्रतिफलापेक्षरहितनिष्काम कर्मयोगमाचर्य अचञ्चल नवविधभक्तिमार्गमनुसरन् आत्मज्ञानमार्गद्वारा जीवन्मुक्तिं वा

- डा.के.कोटेश्वरय्य
चरवाणी - ९९८५१२३२६२

# गीताजयन्ति



विदेहमुक्तिं गीतोपदिष्टनियमपालनद्वारैव प्राप्तुं शक्यते।

गीतागङ्गेदकं पीत्वा पुनर्जन्म नविद्यते।

**गीताविषयसारः -** विणाद योगानुसारं अर्जुनः युद्धरङ्गे परिदृश्यमानान् भीष्मादीन् बन्धूनिति मत्वा तेषां वधाय खिन्नः देहात्मभ्रमविशिष्टः आसीत्। जीवस्य प्रकृत्यभिमानात् दुःखं सम्भवति।

तद्दुःखनिवारणार्थं व्यामोाहापनयनाय सांख्ययोगानुसारं देहातिरिक्तं आत्मज्ञानं तस्य नित्यत्वं अच्छेद्यत्वं अदाह्यत्वं अशोच्यत्वञ्च कृष्णेन कथितम्। जातस्य ध्रुवं मृत्युः। जीर्णवस्त्रमिव शरीरं नश्यति। मरणं नाम जीवस्य पूर्वतनदेहत्यागः देहन्तरस्वीकरणम्। आत्मा नित्यः। आत्मतत्त्वविज्ञानमवश्यं ज्ञेयमिति भगद्वचनम्।

कर्मयोगानुसारं मनसा इन्द्रियाणां नियमनं कर्तव्यम्। आत्मनः अकर्तृत्वं प्रकृतिसंसर्गेण कर्तुत्वाभिमानं सम्भवति सत्वरजस्तमोमुण प्रभावात् कामक्रोधादीनां इन्द्रियाण्यधिष्ठानानि भवन्ति। यज्ञार्थकर्मणः बन्धराहित्यमेव। निष्कामकर्माचरणवश्यमवलम्बनीयमिति कर्मयोगसारः।

ज्ञानयोगमनुसृत्य भगवतः अवतारस्य कारणं अवतारे कर्तव्यं कर्मसङ्गाभावे कर्माचरणत्वं, फलसङ्गरहितत्त्वं, कर्मणः शान्तिहेतुत्वं, यज्ञस्य श्रेष्ठत्वं कर्मयोगत्वञ्च प्रतिपादितम्। कर्मसन्न्यासयोगमनुसृत्य सांख्ययोगयोः भेदः नास्ति। योगिकृतं निष्कामकर्म बन्धकं न भवति। कर्माणि ब्रह्मण्याधाय निस्सङ्गत्वेन कृते कर्मणि पापपुण्यानि लिप्तानि नस्युः। निष्कामकर्मयोगिनः फलसङ्गो नास्ति।

आत्मसंयमयोगमनुसृत्य योगाभ्यासविधिः योगशास्त्रप्रभावः तल्लक्षणं, योगाय आहारादि नियमः प्रोक्तः। योगयुक्तः सर्वं आत्मस्वरूपं पश्यति। सर्वात्मदर्शनफलं प्राप्नोति। विज्ञानयोगमनुसृत्य परमेश्वरस्य विभुत्वं परापरप्रकृतेः उपासके भेदाः, ज्ञानिनः पारम्यं, जीवेश्वरप्रकृति सम्बन्धः, परापराप्रकृतिद्वयस्य कार्यनिरूपणं, अचेतनायाः प्रकृतेः पृथिव्याद्यष्टविभक्तत्वं, प्रपञ्चितम्। पुरुषः एव जीवः अचेतनप्रकृतिनियामकः। परमात्मा जडजीवप्रकृत्योः विलक्षणः। भगवान् सर्वजगदाधरकः इति विपुलीकृतम्।

अक्षरपरब्रह्मयोगमनुसृत्य अधिभूत अधिदैव अधि यज्ञ स्वरूपं, देहान्निष्क्रमणसमये योगिनां कर्तव्यानि, परब्रह्म प्राप्तिसाधनानि, ज्ञानरूपभक्तेः परमसाधनत्वं प्रतिपादितम्।

राजविद्याराजगुह्ययोग मनुसृत्य ज्ञानस्य उत्कृष्टत्वं, गुह्यतमत्वंसर्वभूतस्थितिः परमात्मन्येवेति, परमात्मैव प्रकृतिप्रेरकः, इति सर्वप्राणिगतिः परमात्मा। सर्वभूतसमानः इति ज्ञात्वा ईश्वरार्पणबुद्ध्या सर्वकर्माणि कर्तव्यानीत्युपदिष्टम्।

विभूतियोगमनुसृत्य परमेश्वरस्य सर्वविभूतयः कथिताः। परमात्मैव ज्ञानदीपेन अज्ञानं नाशयति। सर्वं विश्वं परमात्मैव। परमेश्वर विभूतीनामवधिर्नास्तीति विशदीकृतम्। गुणत्रय विभागयोगमनुसृत्य श्रीकृष्णस्य सृष्टिकर्तृत्वं जगद्योनित्वं परमेश्वरत्वं सगुणात्मकस्वरूपं सर्वव्यापकत्वं निर्दिष्टम्।

भक्तियोगमनुसृत्य परमात्मप्रापकसाधनेषु भक्तिरेव गरीयसीति भिन्नलक्षणानि, भक्तिसाध्ययोगः भक्तियोगः इति नित्यमुक्तपरमात्मोपासकः श्रेष्ठः इति, सगुणनिर्गुणोपासकतारतम्यमित्येते विषयाः प्रकटीकृताः। क्षेत्रक्षेत्रज्ञविभाग योगमनुसृत्य क्षेत्रं, क्षेत्रज्ञज्ञानं, प्रकृति पुरुषानादित्वं, तत्संयोगेन सर्वप्राणिसम्भवः, प्रकृतेः कर्तुत्वं पुरुषस्य केवलभोक्तृत्वं उपदिष्टम्। देहः क्षेत्रम्। तन्निमित्रोपयोगीनि प्रकृति सम्बन्धाहङ्कारादीनितत्वानि क्षेत्रमिति प्रकृतिपुरुषायोः सर्वकार्यकर्तुत्वं, सर्वसुख दुःखभोक्तृत्वं प्रतिपादितम्।

गुणत्रय विभागयोगमनुसृत्य सत्त्वरजस्तमोगुण विभक्तं विश्वमिति। प्रकृतेः मातृत्वं, परमात्मनः पितृत्वं गुणबन्धकत्वं, त्रिगुणलक्षणं, कार्यनिरूपणं, गुणातीतलक्षणं तत्प्राप्यं फलिमिति विषयाः निर्दिष्टाः। पुरुषोत्तमप्राप्तियोग मनुसृत्य प्रकृतिः संसारस्य कारणमिति अश्वत्थोदाहरणेन निरूपितम्। प्रकृति पुरुपाभ्यां परमात्मा पुरुषोत्तमः इति प्रकृतिरेव संसारकारण मिति, जीवः परमात्मानः अंशः सूक्ष्मशरीरवानिति निर्दिष्टम्। सर्वभूतक्षरत्वं, निर्दिश्य, कूटस्थः अक्षरः इति क्षराक्षरपुरुषयोः कार्यकारणत्वं, परमात्मज्ञानात् फलञ्चोपदिष्टम्। दैवासुरसम्पद्विभागयोगमनुसृत्य दैवासुरवृत्तयः चिह्नानि, प्राणिनां प्रवृत्तिषु सत्वरजस्तमोनुणप्रभावात् दैवासुरसम्पात्तिः निरुपिता। दैवासुरस्वभावाश्च प्रपञ्चिताः।

श्रद्धात्रयविभाग योगमनुसृत्य सत्त्वरजस्तमोगुणान्वित जगति तद्गुणवतां अभिमताहराः, यज्ञदानतपांसि विशदीकृतानि।

मोक्ष सन्न्यास योगे मोक्षर्थिभिः कर्मसन्न्यासकर्तव्यत्वं ज्ञानज्ञेयकर्मकत्वबुद्धीनां सुखस्य, त्रिगुणैः त्रैविध्यं प्रकाशितम्। एवमष्टादशाध्यायानां गीतासारांशः प्रकाशितः

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयोभूतिः ध्रुवा नीतिर्मतिर्मम।।**



# शरणगतरक्षणधर्मफलम्

- डा सि.रामलक्ष्मी
चरवाणी - ९८८५४६३३७१



कदाचित् आहारार्थं श्येनः गगने कपोतं अनुसरन् तस्मिन् प्रपात्यमानः आसीत्। सः कपोतः वृषदर्भं महाराजं धावन् धावन् अन्तःपुरस्थं शरणं गतः। विशुद्धात्मा राजा त्रासादङ्कमुपागतं आश्वास्य, हे कपोत! त्वं भ्रान्तचेतनः विसंज्ञोऽसि। मत्सकाशमनुप्राप्तं त्वां न कोऽपि ग्रहिष्यति। अहं रक्षाध्यक्षः। त्वदर्थं मम काशीराज्यं जीवितमपि त्यजेयम् इति अभयप्रदानश्चकार। तदा श्येनः राजसकाशं गत्वा अहं प्रयत्नात् कपोतं सम्पादितोस्मि। अयं कपोतः मम भक्ष्यः। अहं क्षदूबाघापीडितः। क्षुदं मन्दयितुमशक्तः। मया अनुसृतः मत्पक्षनखविक्षतः। नैनं रक्षितुमर्हसि। तव स्वराज्ये सर्वप्राणिरक्षणाधिकरोऽस्ति। स्वेन्द्रियदमने, स्वशत्रुषु शिक्षितुमधिकारोऽस्ति। आकाशसञ्चारिषु पक्षिषु तव अधिकारः नास्ति। यदि, त्वं धर्मार्थरक्षणतत्परः क्षुत्पीडितं मामपि रक्षस्वेत्यवोचत्। तदा राजा अहं शरणागतं यं कमपि प्राणिनं न त्यजेयम्, इदं मम व्रतम्, ऋत्क्षुन्निवारणार्थं मत्तः गो ऋक्षवराहमृगमहिषादीन् स्वीकुरु इत्यवोचत्। तदा श्येनः वृषभादीनन्यान् न खादिष्यामि। श्येनाः कपोतान् खादन्ति इति सनातनदैवकल्पित स्थितिरियम्। कपोतरक्षणे त्वं दृढचित्तश्चेत् स्वमासं तुलया कपोतसमं मम देहीत्यवोचत्।

तदा राजा महानुग्रहःतव वचनमिति स्वमांसानि उत्कृत्य उत्कृत्य तुलया समतोलयत्। तदा अन्तः पुरस्थाः स्त्रियः, मन्त्रिभृत्यादयः रुदन्तः आसन्। राज्ञः शरणागत - रक्षणसत्यकर्मणा मही प्रचलिता आसीत्। राजा पार्श्वतः बाहुभ्यां ऊरुतश्च मांसांनि सन्छिद्य तुलां पूरयन्नासीत्। तथापि कपोतसमं मासं न बभूव। तदा राजा केवलमस्थिभूतः रुधिरस्त्रवः स्वयमेव तुलां समीकर्तुं तुलां समारुढः आसीत्। तदा त्रिलोकस्थाः इन्द्रादयः तत्र समागताः। देवदन्दुभयः वादिताः। राजा वृषदर्भः अमृतेन अवसिक्तः। दिव्यमालाभिरभिवृष्टः। देवगन्धर्वाप्सरसः गानं नृत्यं,चक्रुः मणिकाञ्चनतोरणं हेमप्रसादविशिष्टं दिव्यविमानमधिरुह्य राजा स्वर्गलोकं जगाम। एवं राजर्षिः वृषदर्भः शरणागतरक्षणात् त्रिषु लोकेषु राजर्षिषु सुप्रसिद्धः जातः। शरणागतरक्षणं कृतश्चेत् यस्य कस्यापि एवं स्वर्गप्राप्तिः स्याददिति भीष्मः धर्मराजं आनुशासनिक पर्वणि धर्मस्वरूपविवरणे प्रोवाच।

सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम्।
तत्फलं लभते सम्यक् रक्षिते शरणागते।।

''महाप्रदानं सर्वेषु दानेष्वभयप्रदानम्।''



तिरुमलतिरुपतिदेवस्थानानि

तिरुचानूरु

# श्री पद्मावतीदेव्याः ब्रह्मोत्सवः

27-11-2024 तः 06-12-2024 पर्यन्तम्

| दिनाङ्कः | वासरः | प्रातः उत्सवः | रात्रौ उत्सवः |
|---|---|---|---|
| 27-11-2024 | सौम्यवासरः | -- | अङ्कुरार्पणम् |
| 28-11-2024 | बृहस्पतिवासरः | ध्वजारोहणम् | लघुशेषवाहनम् |
| 29-11-2024 | भृगुवासरः | महाशेषवाहनम् | हंसवाहनम् |
| 30-11-2024 | मन्दवासरः | मौक्तिकमण्डपम् | सिंहवाहनम् |
| 01-12-2024 | भानुवासरः | कल्पवृक्षवाहनम् | हनुमद्वाहनम् |
| 02-12-2024 | इन्दुवासरः | पल्लक्युत्सवः सायं-वसन्तोत्सवः | गजवाहनम् |
| 03-12-2024 | भौमवासरः | सर्वभूपालवाहनम्, स्वर्णरथोत्सवः | गरुडवाहनम् |
| 04-12-2024 | सौम्यवासरः | सूर्यप्रभवाहनम् | चन्द्रप्रभवाहनम् |
| 05-12-2024 | बृहस्पतिवासरः | रथोत्सवः | अश्ववाहनम् |
| 06-12-2024 | भृगुवासरः | चक्रस्नानम्, पञ्चमीतीर्थं | ध्वजावरोहणम् |

## तिरुचानूरु श्री पद्मावतीदेव्याः पुष्पयागः

| | | |
|---|---|---|
| 07-12-2024 | मन्दवासरः | पुष्पयागः |













# ति.ति.देवस्थान धर्मकर्तुमण्डली

## ति.ति.दे. नूतन धर्मकर्तुमण्डली २०२४ नवम्बर् मासे आन्ध्रप्रदेश् प्रभुत्वेन नियमित ति.ति.देवस्थान धर्मकर्तुमण्डली



श्री बि.आर्.नायडु
धर्मकर्तुमण्डल्यध्यक्षः



श्री ज्योतुल नेहरु
सभ्यः



श्रीमती वि.प्राशान्ति रेड्डि
सभ्या



श्री एम्.एस्.राजु
सभ्यः



डा.पनबाक लक्ष्मी
सभ्या



श्री एन्.नरसी रेड्डी
सभ्यः



श्री जे.पूर्णा साम्बशीव राव्
सभ्यः



श्री एन्.सदाशिव राव्
सभ्यः



श्री वि.कृष्णमूर्तिः
सभ्यः



श्री ऐ.मुनि कोटेश्वर राव्
सभ्यः



श्री एम्.राजशेखर गौड्
सभ्यः



श्री जङ्गा कृष्णमूर्तिः
सभ्यः



श्री आर्.एन्.दर्शन्
सभ्यः

# ति.ति.देवस्थान धर्मकर्तुमण्डली





श्री वि. एम्.शान्ताराम्
सभ्यः



श्री पि.राममूर्तिः
सभ्यः



श्रीमती जानकी देवी
तम्मीशेट्टी
सभ्या



श्री बि.महेन्द्र रेड्डि
सभ्यः



श्रीमती अनुगोलु रङ्गाश्री
सभ्या



श्री बि.अनन्दसाई
सभ्यः



श्रीमती सुचित्रा एल्ला
सभ्या



एस्.नरेश कुमार्
सभ्यः



डा.अदित देसाई
सभ्यः



श्री जी.सौरभ एच्.बोरा
सभ्यः



श्री जि.भानुप्रकाश रेड्डि
सभ्यः



श्री एस्. सत्यनारायण, ऐ.ए.एस् .,
प्रभुत्वकार्यदर्शी ( एफ् .ए.सी)
कमीषनर् देवादायाशाखा विभागः
एक्स् अफिषियो सभ्यः



श्री जे.श्यामलाराव्, ऐ.ए.एस्.
कार्यनिर्वहणाधिकारी, ति.ति.दे.
एक्स् अफिषियो सभ्यः



06-11-2024 तिथौ धर्मकर्तृमण्डल्याः अध्यक्षत्वेन तिरुमल श्री वेङ्कटेश्वरस्वाम्यालये श्री बि.आर्. नायुडु महोदयाः प्रमाणस्वीकारं चक्रुः। ततः ध्वजस्तम्भं संस्पृश्य प्रणामकुर्वतां दृश्यम्।



06-11-2024 तिथौ ति.ति.दे. धर्मकर्तुमण्डल्यक्षत्वेन श्री बि.आर्.नायुडु महोदयैः प्रमाणस्वीकारानन्तरं रङ्गनायकमण्टपे श्रीपतिप्रसादं स्वीकुर्वतोः अध्यक्षदम्पत्योः ति.ति.दे कार्यनिर्वहणाधिकारिभिः श्री जे.श्यामला रावु ऐ.ए.एस्., महोदयैः, अपि च अनुबन्ध कार्यनिर्वहणाधिराभिः श्री वेङ्कय्यचौदरि ऐ.आर्.एस्., महोदयैः समर्प्यमान दृश्यम्।



07-11-2024 तिथौ ति.ति.दे. धर्मकर्तुमण्डल्याः अध्यक्षैः श्री बि.आर्.नायुडु महोदयैः ति.ति.दे. उद्योगिभिस्सह तिरुमलस्थ काकुलमानुदिब्ब डम्पिंग्याई् परिशीलन दृश्यम्।



08-11-2024 तिथौ तिरुमलस्य धर्मगिरिवेदविज्ञान पीठ सन्दर्शनं कुर्वतः ति.ति.दे. धर्मकर्तुमण्डल्यध्यक्षस्य श्री बि.आर्. नायुडु महोदयस्य स्वागतवचनान्युक्तवतः पीठाध्यक्ष श्री के.यस्.अवधानिमहोदयस्यमनोहर दृश्यम्।



08-11-2024 तिथौ तिरुमलपुण्यक्षेत्रे पेद्दजियय्यर्मठं दृष्टवद्भ्यः ति.ति.दे. धर्मकर्तुमण्डल्यध्यक्षेभ्यः श्री बि.आर्.नायुडु महोदयेभ्यः मङ्गलाशासनपूर्वकाशीःप्रदान श्री श्री श्री पेद्दजियर् स्वामिनां मनोहरदृश्यम्।



08-11-2024 तिरुमलस्थ यस्.वि.गोशालां दृष्ट्वा गोमातुः आहारमसमर्पण सेवां कुर्वतां ति.ति.दे. धर्मकर्तुमण्डल्यध्यक्षाणां श्री बि.आर्.नायुडु महोदयानां मनोहर दृश्यम्। अस्मिन् कार्यक्रमे यस्.वि.गोशाला सञ्चालकाः डा. हरिनाथरेड्डि महोदयाः अपि भागं गृहीतवन्तः।

# दत्तात्रेयजयन्ति

- आचार्य जि.पद्मनाभम्
चरवाणी - ९२४७३२८२८६

श्रीदत्तात्रेयः मार्गशिरशुक्ल - चतुर्दश्यां अवततार। महाराष्ट्रीयाः मार्गशिरपूर्णिमायां दत्तात्रेयजयन्ति - कार्यक्रमं निर्वहन्ति। दत्तात्रेयकथा अनसूया- पातिव्रत्यपरीक्षा कथैव।

कलहकारकः नारदः भक्तिप्रपत्तिभ्यां विष्णुं प्रसन्नश्चाकार। विष्णुना वरं वृणीष्वेति पृष्ठे सति नारदः विष्णोः सत्त्वरूपदर्शनमयाचत। तदा विष्णुः ब्रह्मविष्णुमहेश्वरान् एकीकरणे त्वं सफलश्चेत् तवाभीष्टं पूर्णं स्यादिति समादधौ। तदा नारद त्रिमूर्तीणां एकीकरणसंकल्पेन भूलोकं गत्वा अत्रिमहर्षेः अश्रमं जगाम। आश्रमे ऋष्याभावे सति पतिव्रताशिरोमणिः स्त्रीरत्नमनसूया तस्य आतिथ्यं ददौ। ततः नारदः वैकुण्ठं गत्वा पतिव्रतासु अनसूया - -तुल्या न काप्यस्तीति लक्ष्मीं प्रोवाच। आश्चर्यमग्ना लक्ष्मीः विष्णुमूर्त्या तस्याः पातिव्रत्यपरीक्षां करिष्यामीत्यवोचत्। ततः नारदः कैलासं गत्वा पार्वतीमपि अनसूयापातिव्रत्यमहत्त्वं प्रोवाच। सापि सर्वेश्वरद्वारा तस्याः पातिव्रत्यपरीक्षां करिष्यमीत्युवाच। ततः नारदः सत्यलोकं गत्वा ब्रह्मपत्न्या सावित्र्या अनसूया पातिव्रत्यमहत्त्वं जगाद। सापि स्वपतिद्वारा अनसूया - पातिव्रत्यमहत्त्वं ज्ञास्यामीत्यवोचत्। एवं त्रिमूर्तिपत्नीनां आलोचनानुगुणं त्रिमूर्तयः ब्राह्मणवेषधारिणः भूत्वा अत्रिमहर्षेराश्रमं जग्मुः। ततस्ते वयं क्षुत्बाधापीडिताः इति अनसूयया विगतवस्त्रया अस्माकमन्नसन्तर्पणं कर्तव्यमिति ऊचुः। तदा आश्चर्यमग्ना अनसूया भर्तुः एतेषां अभीष्टं निवेदितवती। तदा अत्रिः आत्मज्ञानी योगी दिव्यदृष्ट्या त्रिमूर्तयः मत्पत्नीपरीक्षार्थमागताः इति ज्ञात्वा भार्यायाः मन्त्रोदकं दत्वा तदुदकं त्रिमूर्तिशिरस्सु प्रोक्षणं कुरु ततः अन्नसमर्पणं कुरु इति प्रोवाच। ततः मन्त्रोदकप्रोक्षणात् शिरसि ते ब्राह्मणाः शिशवः सञ्जाताः। तदा अनसूया तेषां स्तन्यं दत्वा तृप्तान् चकार। तदैव हठात् नारदः आगत्य



शिशुरूपेण क्रीडतः त्रिमूर्तीन् दृष्ट्वा आनन्दपरवशः बभूव। ततः तस्मात् स्थानात् लक्ष्मीपार्वतीसावित्रीसकाशं गत्वा तासां पतीनां शिशुत्वं प्रोवाच। तदा ताः त्रिस्रः शिशुभर्तुदर्शनं कारयेति नारदं प्रार्थयामासुः। तदा नारदः ताभिस्साकं अत्रिमहर्ष्याश्रमं गत्वा स्वयं इदं निगूहितं शिशुत्रयं आश्रमे क्रीडन्तं ताभ्यः दर्शयामास।

तदा ताः गर्वभङ्गेन अनसूयापादयोः पतित्वा स्वपतीनां ब्रह्मविष्णुमहेश्वराणां पूर्वरूपं दत्वा समर्पयेति प्रार्थयामासुः। तदा सा भर्तुरनुमत्या मन्त्रजलसंप्रोक्षणेन निजरूपधारिणः त्रिमूर्तीन् चकार। तदा त्रिमूर्तयः तस्याः पातिव्रत्यमहत्त्वं ज्ञात्वा वरं वृणीष्वेति समूचुः। तदा दम्पती अनसूया अत्रिश्च एककण्ठेन त्रिमूर्तयः भवन्तः आवयोः पुत्ररूपेण जातव्याः इति वरदानं प्रार्थयामासतुः। झटित्येव त्रिमूर्तिकळाभिः मुनिदम्पत्योः पुत्रः अजायत। सैव दत्तात्रेयः षट्हस्तैः त्रिशिरोभिः अदृश्यत। मध्यशिरः विष्णुरूपः, दक्षिणशिरः शिवरूपः पश्चिमशिरः ब्रह्मरूपः भवति। अन्यत्र दत्तात्रेयोत्पत्तिकथा भिन्ना वर्तते। शिशूनां त्रिमूर्तिस्वरूपेण परिणामसमये नारदः हठात् तत्र आगत्य त्रिमूर्तिन् दृष्ट्वा एकत्र, स्थितानां भवतां स्वरूपं दर्शयन्तु इत्यपृच्छत्। नारदाभीष्ट पूरणार्थं त्रिमूर्तयः दत्तात्रेयरूपमवापुः। दत्तात्रेयः महासन्न्यासी। सः मार्गशिरशुक्लचतुर्दश्यां बुधवासरे कृत्तिकानक्षत्रे जन्म लेभे।

दत्तात्रेयदेवालयेषु अद्यापि सङ्कीर्तनानि प्रवर्तन्ते। महाराष्ट्रीयाः दत्तात्रेये अतिशयभक्तिभरिताः गुरुवारे पूजाः महोत्साहेन समाचरन्ति। यमदंष्ट्राकष्टदिनपरिहारात् सन्तोष सूचकतया उग्ररूपदत्तात्रेयपूजाः प्रसिद्धिं गताः।

दत्तात्रेयकथायाः आन्तर्थं सुरवरं प्रतापरेड्यादयः एवं वदन्ति -

वेदकाले इन्द्रादिदेवानां प्रामुख्यमागतम्। पुराणकाले प्रादुर्भूतमूर्तित्रयमेकमेव। भगवानेक एव इति वेदप्रमाण समन्वयाय दत्तात्रेयोद्भवकथा प्रादुर्भूतेति बह्वाध्यात्मिकवेतॄणामभिप्रायः। पातिव्रत्यप्रभावात् साक्षाद्देवाः अपि वशीभूताः परिणमन्ते इत्यपि दत्तात्रेयकथा सूचयति। यमदंष्ट्राकष्टदिनपरिहारकपर्वदिनमिति बहूनां विश्वासः। दत्तात्रेयः औदुम्बरप्रियः।औदुम्बरवृक्षाधः स्थित्वा दत्तात्रेयमन्त्रपठनात् महत्फलं लभ्यते इति हैन्दवानां प्रबलविश्वासः।

> नमस्ते भगवन् देव दत्तात्रेय जगत्प्रभो।
> सर्वबाधाप्रशमनं कुरुशान्तिं प्रयच्छ मे।।

अनसूयासुतश्रीशदिगम्बरनमो नित्यं तुभ्यं मे वरदो भव भूतप्रेत पिशाचाद्याः ये स्मरणमात्रतः दूरादेव पलायन्ते दत्तात्रेयं नमामि तम्। यन्नामस्मरणाद्दैन्यं पापं तापश्च नश्यति भीतिग्रहार्ति दुस्वप्नाः दत्तात्रेयं नमामि तं। जयलाभयशः कामदातुर्दत्तस्य

> स्तवं भोगमोक्षप्रदं यस्सत्यं पठेत् दत्तप्रियो भवेत्।
> गुरुमध्ये स्थितं विश्वं विश्वमध्ये स्थितो गुरुः।
> गुरुर्विश्वं न चान्योऽस्ति तस्मै श्रीगुरवे नमः।।

दत्तात्रेयसंप्रदाये कळियुगात् पूर्वं दत्तात्रेयस्य षोडशावताराः इत्युक्तम्। स्वपरतत्त्वनित्यभूलोकनिवासात् महर्षीणां स्वप्रसादितसगुणसाक्षात्कराः एव तस्य षोडशावताराः इत्यवगन्तव्यम् एतानवतारानधिकृत्य श्रीवासुदेवानन्दसरस्वती स्वामिभिः दत्तपुराणे वर्णितम्।

**१. योगिराजः** - नारायणोद्भवः ब्रह्मा स्वतपसा अत्र्यादीन् संसृज्य सृष्टिविस्तरणाय अत्र्यनसूये आज्ञपयामास। तयोः रूक्षपर्वते तपः काले कार्तिकपौर्णम्यां बुधवासरे प्रथमयामे योगिराजः आविर्भूतः। अन्येष्ववताराः एवमेव प्रादुर्भूताः। तानधिकृत्य संक्षिप्तश्लोकविवरणम् -

१. अद्वयानन्दरूपाय योगमायाधरायच
योगिराजाय देवाय श्रीदत्ताय नमो नमः।

२. अत्रिवरदः ३. श्रीदत्तात्रेयः ४. कालाग्निशयनः ५. योगिजनवल्लभः ६. श्रीलीला विश्वम्भरः ७. सिद्धराजः ८. ज्ञानसागरः ९. विश्वम्भरावदूतः १०. मायामुक्तावधूतः ११. मायामुक्तावधूतः १२. आदिगुरुः १३. शिवरूपः १४. श्रीदेवदेवः १५. दिगम्बरः १६. श्रीकृष्णश्यामकमलनयनः।

**भारतदेशे आध्यात्मिकसंप्रदायानुसरिभिः** - परमगुरुत्वेन मूलपुरुषत्वेन दत्तात्रेयः साधकाननुगृह्य महात्मानः चकार। अस्मिन् वर्षे डिशेम्बर् मासे १४ तिथौ चतुर्दश्यां दत्तात्रेयजयन्तिं निर्वहिष्यन्ति।

**विशेषांशाः -** दत्तात्रेयमधिकृत्य दत्तात्रेयः योगगुरुः हिन्दूमतस्थानां दैवम्। ब्रह्मविष्णुमहेश्वरत्रिमूर्त्यात्मिकावतारः। ब्रह्माण्ड मार्कण्डेय भागवत पुराणान्यनुसृत्य परब्रह्मस्वरूपमेवा यम्। अस्य जन्माधिकृत्य ग्रन्थेषु भिन्नभिन्नाभिप्रायास्सन्ति। वेदान्तयोगसम्बन्धाः अनेकेग्रन्थाः अनेन विरचिताः। स्वतन्त्रात्मगीताग्रन्थः अनेनैवविरचितः। अयं दक्षिणभारतदेशे अनेकान् शैवोद्यमान् मतान् उत्तेजयामास। महाराष्ट्रगुजरात् मध्यप्रदेश राजस्थान् हिमालयप्रान्तेषु शैवमतस्य प्राचुर्यं दृश्यते। दत्तात्रेयः साधारणजीवतप्रियः, दयाळुः। भक्त्युद्यमऋषिकविः। तुकाराम्, यात्राभिः दत्तात्रेयः स्वज्ञानप्रदाता आसीदिति प्रकटीचकार।

शैवमतनाथसंप्रदाये दत्तात्रेयः आदिगुरुः इति तन्त्रशास्त्रे योगे - दैवसमः नाथः इति वदन्ति।

१८ शताब्दे शैववैष्णवगुरुरिति मराठीभाषास्थे नवनाथ भक्तिसारग्रन्थे उट्टङ्कितम्। हिन्दू कालण्डर् अनुसृत्य मार्ग शिरमासे (नवम्बर् - डिसेम्बर्) दत्तजयन्तिं निर्वहन्ति।

सिक्मतगुरुः गुरुगोविन्दसिङ्ग् दत्तात्रयजीवितचरितं स्वरुद्रावतारग्रन्थे दत्तात्रेयस्य आध्यात्मिकप्रयाणं तेन प्रकटितम्। (२४) चर्तुविंशति प्रकृतिगुरुन् निर्देशयामास।

वेदव्यासपुराणान्यनुसृत्य दत्तात्रेयः अत्र्यनुसूययोः

आश्रमे जातः। वैदिक - ऋषिवर्यः अत्रिः ऋग्वेदस्य निर्माणे अत्यन्तमुपचकार। अनसूयातिदम्पती - महाराष्ट्रे नान्देडमण्डले माहरप्रदेशे निवसितवन्ताविति, केचित् पश्चिमदक्षिणदेशप्रान्ते दत्तात्रेयस्य पिता उवासेति, केचित् काश्मीर् अटवीप्रान्ते अमरनाथदेवालय समीपः पितृनिवासः इति। केचित् अविवाहितअनसूयायाः त्रिषु पुत्रेषु दुर्वास-चन्द्र-दत्तात्रेयेबु एकः पुत्रः इति वदन्ति। अन्यगाथामनुसृत्य अत्रिमहर्षिः वार्धक्यदशायां अनुसूयां परिणीय सन्तानार्थं धर्मपत्न्या सह त्रिमूर्तीन् प्रार्थयामासेति तत्फलतया सन्तुष्टाः त्रिमूर्तयः लोकाय तेजोविज्ञानप्रदानार्थं त्रिमूर्तिशक्तिगुणभरितं दत्तात्रेयं पुत्रं ददुरिति वदन्ति।

ऋषिनियामानुसारं दत्तात्रेयः प्रत्यहनि आन्ध्रराष्ट्रे पिठापुरपवित्रप्रदेशे भिक्षाटनलब्धेन आहारेण कालं यापयामसेति वदन्ति। महाभारते पुराणेषु च दत्तात्रेयः असाधारणमहाशक्तिसमन्वितः महाज्ञानीति इन्द्रिया तीतदृष्टिमान् विष्णोरवतारः जगद्गुरुरिति वर्णितः। बाल्ये एव सन्यासी सन् लौकिकप्रपञ्चं परित्यज्य बहुवर्षपर्यन्तं जलध्याने आसीदिति वदन्ति। दत्तात्रेयस्य बाल्यकाले तस्य यात्रासमये लब्धे पादमुद्रे गिर्नारु गुणगद - गुजरात् राष्ट्र पर्वतशिखरे अद्यापि रक्षिते दृश्येते इति वदन्ति। दत्तात्रेयः द्वादशसहस्रवर्षपर्यन्तं तपश्चकार। त्रिपुरारहस्यग्रन्थे शिष्यः परशुरामः तमिळनाडुराष्ट्रे रामेश्वरसमीपे गन्धमादनपर्वते दत्तात्रेयमुद्दिश्य तपश्चकारेति वदन्ति। हिन्दूग्रन्थाननुसृत्य बालकः दत्तात्रेयः गुरुणा विना सर्वशास्त्रज्ञानं सम्पाद्य आत्मज्ञानं दिव्यदृष्टिं च प्राप्य स्वसन्न्यासयात्रासमये प्रकृतिस्वरूपान् चर्तुविंशतिगुरून् विवेद इति वदन्ति। विद्यार्जनाय स्वप्रयत्नः आवश्यकः इति लोकाय दत्तात्रेयस्य विद्याभ्यासः बोधयतीति योगीश्वराणामभिप्रायः।

**दत्तात्रेयस्वरूपम् -** दत्तात्रेयः षट्हस्तैः त्रिशिरोभिः सन्दृश्यते। त्रिशिरसः ब्रह्मविष्णुशिवस्वरूपप्रतीकाः।

अस्य हस्तद्वये जपमालाकमण्डलु, ब्रह्मणः, शाक्त सुदर्शनचक्रे विष्णोः, त्रिशूलडमरुकौ शिवस्य व्यज्यन्ते। दत्तात्रेयः सर्वसङ्गपरित्यागेन अरण्यसञ्चारी ध्यानमग्नः महर्षिरिव दृश्यमानः वर्तते।

चित्रेषु शिल्पेषु चतुश्शुनकैः एक घेन्वा परिवृतः दत्तात्रेयः चर्तुर्वेदानां, भूभारं वहन्त्याः भूमातुः प्रतीकः। भारते दत्तात्रेयस्य भिन्नभिन्नप्रतिमाः दृश्यन्ते। अस्य त्रिशिरसः सत्त्वरजस्तापोगुण प्रतीकाः। षट्हस्ताः यमनियम, शम, दम शान्ति प्रतीकाः भवन्ति। कामधेनुः पञ्चभूतानां, चत्वारः शुनकाः अन्तश्शत्रवः इच्छावासनाशा, त्रिमूर्तिनां प्रतीकाः। अन्तश्शत्रुविजेता मार्गदर्शकः जगद्गुरुः योगीति दत्तात्रेयं जानीमः।

**दत्तस्तुतिः -**

अनसूयात्रि सम्भूत दत्तात्रेय महामते।
सर्वदेवादिदेवत्वं ममचित्तं स्थिरीकुरु।
सर्वसङ्कटहारी त्वं ममचित्तंस्थिरीकुरु।
सर्वपापक्षयकरः तापदैन्यनिवारकः।
योगीष्टः प्रभुस्स त्वं मम चित्तं स्थिरीकुरु॥






# हनुमद्व्रतम्

- डा एम्.ईश्वरम्मा
चरवाणी - ८१०६५७८२५०

वत्यते अन्नादिकमनेनेति व्रतम्। व्रतीवर्जने धातुः। पुण्यहेतुकशास्त्रनियमः व्रतम्। तच्च उपवासादिरूपकं पुण्यव्रतम्। लक्ष्मीव्रतम् गौरीव्रतम् सरस्वतीव्रतम् - सत्यनारायणव्रतमित्यादीनि बहूनि व्रतानि भक्तैरभीष्टसिद्ध्यर्थमाचर्यन्ते। तेषु व्रतेषु हनुमद्व्रतमेकम्। हनुमद्व्रतं हनुमज्जयन्ति उभावपि नैकम्। चैत्रशुक्लपौर्णम्यां सूर्यमानकालप्रकारं हनुमज्जन्मदिनं भवति। वेदव्यासरचित भविष्योत्तर पुराणे एव हनुमद्व्रतपूजाप्रस्तावना वर्तते। हिन्दूमते भारते रामायणकालादेव हनुमत्पूजा प्रवर्तते। कुलमतजातिभेदान् विस्मृत्य हनुमत्पूजाव्रतं सर्वे निर्वहन्ति। हनुमान् सत्यस्वरूपः, धर्मात्मा धैर्योत्साहवीर्यबलोपेतः महाविज्ञानवेत्ता, भक्तानां सर्वबाधानिवारक शक्तिमान्। अयं व्यक्तिगतदैनन्दिन समस्यानां परिहारकः भवति। अयं आकशे भ्रमत्सूर्यात् सर्वशास्त्रविद्याः अभ्यस्तवान्।

**मनोजवं मारुततुल्यवेगं जितेन्द्रियं बद्धिमतां वरिष्ठं।**
**वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसानमामि॥**

हनुमान् मन इव वायु रिव महावेगोपेतः। सर्वेन्द्रियविजेता अणिमा, महिमा, गरिमा-प्रप्ति, प्राकाम्यमीशत्व मित्यष्टादशविभूतिस्वाधीनः। अयं वायुपुत्रः वानर सैन्याधिपतिः श्रीरामदूतः अपि।

**यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिं।**
**बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम्॥**

अयं सर्वदा रामतारकमन्त्रजपात् रामायणे असाधारण कार्याणि, साधयामास। त्रेतायुगे भविष्यद्ब्रह्मेति आशीर्वादमपि प्राप।

**बदि्धर्बलं योशोधैर्यं निर्भयत्वमरोगता।**
**अजाड्यं वाक्पटत्वं च हनुमत्स्मरणाद्भवेत्॥**

हनुमान् भक्तिमार्गसाधनायैव स्वभक्तेभ्यः अतीन्द्रियदैवशक्तीः उपयुयोज। श्रीराममन्त्रजपात् चिरञ्जीवी हनुमान् प्रत्यक्षीभूय अद्यापि अस्माकं ल्केशान् सर्वदा परिहरिष्यतीति भक्तानां विश्वासः।

**हनुमद्व्रतविधानम् - :**

**मार्गशीर्षत्रयोदश्यां शुक्लायां जनकात्मजा।**
**दृष्टादेवी जगन्माता महावीरेण, धीमता॥**

मृगशिरानक्षत्रं हनुमतः इष्टप्रदम्। भक्तसुलभस्य हनुमदनुग्रहप्राप्ते दिव्यमार्गः। मार्गशिरत्रयोदश्यां हनुमन्तं पूजयित्वा तस्य शक्तिस्वरूपं सुवर्चलादेवीं, पम्पानदीं कलशे आवाहयित्वा सम्पूज्य हनुमत्कथाश्रावणानन्तरं, प्रसादं स्वीकृत्य व्रतं समापयन्ति। त्रयोदशग्रन्थितोरं धरन्ति। एवं त्रयोदशवर्षपर्यन्तं हनुमद्व्रते कृते हनुमदनुग्रहः प्राप्यते इति शास्त्रवचनम्। हनुमतः पम्पातीरविहारत्वात् व्रतमपि पम्पानदीतीरे कर्तव्यम्। एतद्व्रता चरणं पम्पातीरे असाध्यत्वात् पम्पाजलकलशं आनीय पार्श्वे हनुमद्व्रताचरणे सति सन्तुष्टः हनुमान् अनुग्रहिष्यति। आचम्य एवङ्गुण विशेषणविशिष्टायां शुभतिथौ, श्रीवर्चलासहित हनुमद्व्रत पूजाङ्गत्वेन पम्पापूजां करिष्ये इत्युक्तवा जलस्पर्शः कर्तव्यः। आदौ पम्पाकलशप्रतिष्ठापनं कृत्वा षोडशोपचारैः पम्पापूजा कर्तव्या। पीठे यथाशक्ति तण्डुलानि समर्प्य पीताम्बरं प्रस्थाप्य

(प्रस्तरणं कृत्वा) हनुमद्विग्रहं चित्रपटं वा पुष्पैरलङ्कृत्य पुरतः पञ्चताम्बूलपत्राणि एकरीत्या प्रस्तार्य तत्र रजतपात्रं स्थापनीयम्।

इममेवमन्त्रेण तत्पात्रं पम्पाजलेन पूरीकर्तव्यम् इमं मेवरुणश्रुधीह मद्या च मृडय त्वामवस्युराचके तत्त्वा यामि ब्राह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः आहेडमानो वरुणेह बोध्योरुशगूसमानः आयुः प्रमोषीः।

**इमं मे गङ्गे यमुने सरस्वति शतुद्रस्तोमगों नच तावरुष्णिय।**
**असिक्रिया मरुद्व्रघेवितस्थया र्जीकीये श्रृणुह्यसुषोमया।।**

पश्चात् तस्मिन् पम्पाकलशे सुवर्णमौक्तिकानि गन्धपुष्पाक्षतानि अष्टगन्धकपूर्णाणि संस्थाप्य ह्रीं ह्रीं ह्रीं हः तटिन्याद्वादशकळाः इहागच्छतागच्छत। ओं हं सूर्यमण्डलाय द्वादशकळात्मने तद्देवताकलशाय नमः इति कलशाय नसस्कृत्य नूतनवस्त्रं परितः बद्ध्वा कलशं बृहत्सामसमन्त्रेण रक्षाबन्धनं कर्तव्यम्।

**बृहत्सामक्षत्रभृद्वुद्ध्वृष्टि यंत्रिष्णु भौजशु ऋभितमुग्रवीरं।**
**इन्द्रस्वोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रसा।।**

**पुष्पाक्षतानि स्वीकृत्य -** ओं ह्रीं श्रीं ओं नमो भगवते अशेषतीर्थालवाले शिव जटाधिरूढेगङ्गे गङ्गम्बिके स्वाहा।।

सर्वानन्दकरी मशेषदुरितध्वसी मृगाङ्कप्रभां त्र्यक्षामूर्ध्वकरद्वयेन दधतीं पाशं सृणीं चक्रमात्।

दोर्भ्या चामृतपूर्णकुम्भमवरे मुक्ताक्षमालाधरां गङ्गासिन्धु सरिद्वरादिरचितां श्रीतीर्थं शक्तिं भजे।। इति हस्तस्थ **पुष्पाक्षतानि कलशे स्थाप्य नमः कर्तव्यम्।**

**पश्चात् पम्पाकलशस्य प्राणप्रतिष्ठा कर्तव्या।**

ओं असुनीते पुनरस्मा सुचक्षुः पुनः प्राणमहिनो धौहि भोगं। ज्योक्पश्येम सूर्यमुच्चरन्त मनुमते मृडयान स्वस्ति। अमृतम् वै प्राणा अमृतमापः प्राणानेव यथा स्थानमुपह्वयते पम्पाकलश स्थितश्रीगङ्गामहादेवी इह, प्राण इह, जीव इह जीव इहागच्छ।

सर्वेन्द्रियाणि सुखं चिरं तिष्ठन्तु स्वाहा।।

स्थिराभव वरदा भव सुमुखीभव। सुप्रसन्नाभव प्रसीद, प्रसीद, प्रसीद।।

इति प्राण प्रतिष्ठानन्तरं पम्पाकलशपूजा कर्तव्या।

**हनुमत्कथा -** सूतमहर्षिं शौनकादिमहर्षयः श्रीहनुमदुद्भवं विवृणोतु इत्यपृच्छन्। तदा तेन कथा एवमुक्ता : - कदाचित् व्यासमहर्षिः द्वैतवनस्थपाण्डवसकाश माजगाम। धर्मजः सोदरैः भार्यया द्रौपद्या सह आगत्य स्वागतमुक्त्वा आहूय अर्घ्यपाद्यं दत्वा भक्तिश्रद्धाभ्यां तं, सवेयामासुः। सन्तुष्टः व्यासः द्रौपदीपातिव्रत्यं तुष्टाव। भक्तिश्रद्धाभ्यां करणीयं व्रतं वर्तते इति तद्व्रतं कार्यसिद्धिं शीघ्रफलं दस्यातीति तदेव हनुमद्व्रतमित्युवाच। तद्व्रतं दुष्टग्रहव्याधीन् नाशयित्वा सकलशुभानि दास्यतीति तदाचर्य पुनः राज्यं लभध्वमित्युपदिदेश। पूर्वमेतदव्रतं कृष्णः द्रौपद्यै बोधयित्वा स्वयमेव तया तद्व्रतं कारयासेति तत्प्रभावादेव पाण्डवाणां सर्वसम्पत्प्राप्तिः बभूवेत्यवोचत्। परन्तु कदाचिदर्जुनः द्रौपदीहस्तस्थहनुमत्तोरणं अधिकृत्य ज्ञात्वा गर्वेण वानरमधिकृत्य किं व्रतमिति निनिन्द। स्वध्वजपताके बद्धः वानरः। तस्य व्रताचरणं निरर्थकमिति दुर्वचनानि प्रयुयोज। तदा रुदन्ती द्रौपदी कृष्णेन प्रोक्तं तेनैव कारितं व्रतमिदमिति प्रोवाच। क्रुद्धः अर्जुनः तस्याः हस्तस्थतोरणं बलादपनीय दूरे पातयामास। तदा प्रभृति, पाण्डवानां क्लेशाः अधिकाः जाताः। अरण्याज्ञातवासः तदा अर्जुन कृतव्रतनिन्दाफलमेवेति व्यासः धर्मराजं विशदं प्रोवाचत्रोयदश ग्रन्थिबद्धहनुमत्तोरण निवारणात् त्रयोदशवर्षवनवासः प्राप्तः इति दोषपरिहारार्थं झटिति हनुमद्व्रतमाचरणीयमितिहितं प्रोवाच। अस्मिन् विषये सन्दिग्धः धर्मजः इतःपूर्वं इदं, व्रतमाचर्य सत्फलं प्राप्ताः के इति व्यासं पप्रच्छ। तदा व्यासः श्रीरामसम्बन्धकथामुवाच : पुरा श्रीरामः सीतान्वेषणं कुर्वन् ऋष्यमूकपर्वतं प्राप। सुग्रीवहनुमद्भ्यां सख्यं स्ववृत्तान्तं कथयन् स्वस्य देवताभिः दत्तवरान् उद्घङ्कितवान्। ब्रह्मादिदेवाः हनुमन्तमुद्दिश्य हे हनुमन्! त्वं हनुमद्व्रतस्य नायकः भविष्यसि। भक्तिश्रद्धाभ्यां त्वां पूजयित्वा त्वद्व्रतमाचरतां सर्वेषां वाञ्छाः पूरयिष्यसि इति ब्रह्मोक्तवचनानि रामायापि प्रोक्त्वा, त्वं मम दासः इति हीनभावनया विना मद्व्रतमाचर्य समुचितं फलं प्राप्नुहीत्यवोचन् त्वरया सीतादर्शनं प्राप्य रावणसंहारं कृत्वा अयोध्यापतिर्भविष्यसीति विज्ञापयामास। तदा अकाशवाण्यपि हनुमदुक्तं सत्यमेवेति प्रोवाच। व्रतविधानमपि रामेण पृष्टेसति मार्गशिरशुक्लत्रयोदश्यां हनुमद्व्रतमाचरणीयमिति विज्ञापिततान्। पम्पानदीतीरे सुग्रीवादिभिः सह सः व्रतं चकार। त्रयोदशग्रन्थियुतं तोरं पूजयित्वा स्वहस्ते धृतवान्। अतः निस्संशयं धर्मराजादीन् व्रताचरणाय व्यासः प्रेरयामास। ततः धर्मराजः संतृप्तः भार्यासोदरैः शास्त्रोक्तरीत्या व्रतमाचर्य तोरं भक्तिश्रद्धाभ्यां हस्ते वबन्ध। अतःसर्वैरपि क्लेशनिवारणाय, सर्वसंवृद्धये हनुमद्व्रतमाचरणीयम्।



चित्रकथा

# महादाता

तेलुगु मूलम् - डा.श्रीनिवासदीक्षितुलु
चित्राणि - श्री के. द्वारकानाथः
संस्कृतानुवादः - डा.सूर्यनारायणरेड्डि
चरवाणी - ८१०६५७८२५०

कदाचित् श्रीकृष्णार्जुनौ वनेविहरन्तावास्ताम्, सम्भाषणसन्दर्भे श्रीकृष्णः। 1




अर्जुनः कोपोद्रिक्तः आसीत्। सः कृष्णमुद्दिश्य। 3




तदा एकः ब्राह्मणः आगत्य अर्जुनं अर्थयामास। 5

हे अर्जुन! मम धर्मपत्नी मृता। तस्याः दहन संस्कारार्थं सुगन्ध चन्दन शुष्केन्धनमावश्यकम्। 6



सुगन्धचन्दनेन्धनानयनाय अर्जुनः भटमादिदेश। भटः प्रत्यागतः। 7

प्रभो पर्याप्तचन्दनेन्धनं न लब्धम्। 8



अर्जुनः ब्राह्मणमुद्दिश्य 9

आर्यः चन्दनगन्धेन्धनं पर्याप्तं नलब्धम्, तव वाञ्छां न पूरयामि 10



ब्राह्मणः निराशया कर्णसकाशं जगाम। ततः कर्णमुद्दिश्य 11

अङ्गराज! मम मृतभार्यायाः दहन संस्कारार्थं सुगन्धचन्दनदारूणि आवश्यकानि। 12



झटिति कर्णः चन्दनगन्धदारूणि आनयनाय भटमादिदेश। भटः 13

प्रभो शुष्कगन्धेन्धनं न कुत्रापि लब्धम्। 14

तथैव 15

कर्णः भटमाह्वयामास, कर्णाज्ञया सः भवनस्तम्भोपयुक्त दारूणि कुठारेण छेदयामास। भवनं भूमावपतत्। तदा स्तम्भ छिन्नदारूणि उपयुज्य तव भार्यामृतकळेबरदहन 16

18 तथैव अङ्गराज।

संस्कारं निर्वर्तयस्व इति ब्राह्मणमुवाच कर्णः। 17

अङ्गराजदत्तसुगन्धचन्दनदारूणि शकटे नयन् विषयं अर्जुनाय ब्राह्मणः प्रोवाच। 19

अर्जुन! ज्ञातोऽसि वा? 20

अर्जुनः नतशिरस्कः। श्रीकृष्णः विवृणोति। 21

दानाचरणवाञ्छा बलीया चेत् यः कोऽपि कथमपि कार्यं करिष्यति तस्य अवरोधाः न भविष्यन्ति। 22

श्रीकृष्णः मन्दहासश्चकार। कर्णदानगुणः महानिति अर्जुनः विवेद। 23

अङ्गराजः महादातेति लोकप्रसिद्धिं गतः तस्य यशः शाश्वतं लोके स्मर्यते। 24

लोकास्समस्ताः सुखिनो भवन्तु।

# बालविनोदिनी

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



१. गीताजयन्ति
२. सुब्रह्मण्यषष्टी
३. धनुर्मासः

उचित समाधान सङ्ख्या कोशे लिखन्तु।



ताले विद्यामान गणितशात्रीय परिष्काराय समीचीनम् कीलं (कीं) समन्वयं कुर्वन्तु।

समाधानानि :- 1 (ii), 2. (i), 3.(iv), 4.(iii), 5. (v)



चित्राणि क्रमसंख्यापद्धतौ निक्षिप्य कथां ज्ञात्वा नीतिं जानन्तु।

समाधानानि :- चित्र क्रम संख्या - २,१,३,४



Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Ph.D., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road, Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

तिरुमलतिरुपतिदेवस्थानानि



# “सप्तगिरि”



## मासिकपत्रिकासकालप्राप्त्यर्थम्

➤सप्तगिरि मासपत्रिकायाः धनप्रेषणसमये ति.ति.दे. द्वारा दत्त संख्यां पाठकाः पुनरेकवारं परिशीलयन्तु।

➤यतः सप्तगिरिपत्रिकामप्राप्ताः स्वेषां निर्दिष्टसंख्यां प्रधानसम्पादक कार्यालयं प्रेषयित्वा समाधानं प्राप्तुं अवकाशः अस्ति।

➤सप्तगिरि पत्रिकायाः अप्राप्तौ, प्राप्तिस्थानपरिणामे च ई मैल् (chiefeditortpt@gmail.com) ऐ डि द्वारा विषयं ज्ञास्यन्तु।

➤इ मैल् - सौकर्यरहिताः ०८७७ - २२६४५४३, ०८७७-२२६४३५९ संख्याः प्रति फोन् कृत्वा स्वपत्रिकासंख्यां उक्त्वा समस्यापरिष्कारं प्रान्पुवन्तु।

➤प्रत्यक्षतया समस्यापरिष्कारार्थं प्रधानसम्पादककार्यालये कर्माचरण निर्णीतवेळायां सप्तगिरिकार्यालये ति.ति.दे. प्रेस् भवने द्वितीयप्रासदे (तिरुपति - ५१७ ५०१) प्रधानसम्पादकं मिलन्तु।

## सप्तगिरिपत्रिकाप्राप्तिधनसहायार्थम्

➤सप्तगिरि पत्रिकाप्राप्त्यर्थं - स्वप्राप्तिस्थानम् पिनकोड्, सेल् फोन् संख्या, अभीष्ट पत्रिकाभाषानाम, स्पष्टं लेखनीयम्।

➤सप्तगिरि पत्रिक सांवत्सरिक साहाय्यधनं रू.२४०/- ।

➤सप्तगिरिपत्रिका जीवित साहाय्ययधनं(१२ वर्षाः एव-रू.२४००/-

➤ सप्तगिरिपत्रिका अन्यदेशेभ्यः सांवत्सरिकधनसाहाय्यधनं रू. १०३०/-

➤ पाठकाः सप्तगिरिपत्रिका धनम् - डि.डि/ईयं.ओ/ऐपिओ/ अन्लैन् (ttddevasthanams.ap.gov.in) द्वारा प्रेषयन्तु।

➤सप्तगिरि पाठकाः साहाय्यधनं येन केनापि जातीयब्याङ्क् द्वारा प्रधानसम्पादकः सप्तगिरि - पत्रिका ति.ति.दे. तिरुपति नाम्ना डि.डि. स्वीकृत्य पोस्ट् द्वारा प्रप्तिस्थानम् प्रधान सम्पादकः सप्तगिरि कार्यालयः द्वितीय प्रसादः ति.ति.दे. प्रसे् भवनम् - तिरुपति - ५१७ ५०१.



